# कमलाम्बा नवावरणम्

## मुत्तुस्वामि दीक्षितर्

*typeset using LaTeX 2ε, pdfLaTeX, hyperref*

*and Type I dvng fonts*

## 1 śrīmahāgaṇapatiravatu

# श्रीमहागणपति ध्यानकीर्तनम्

# श्रीमहागणपतिरवतु माम्

रागं: गौळ (१५) तालं: तिश्र त्रिपु,त

पल्लवि

श्रीमहागणपतिरवतु मां
सिद्धिविनायको मातङ्गमुखः श्री

अनुपल्लवि

कामजनक विधीन्द्रसन्नुतकमलालयतटनिवासो
कोमळतरपल्लवपदकरगुरुगुहाग्रजः शिवात्मजः

चरणम्

सुवर्णाकर्षणविघ्नराजो पादाम्बुजो
गौरवर्णवसनधरो फालचन्द्रो

नरादिविनुतलम्बोदरो

कुवलयस्वविषाणपाशाङ्कुश-

मोदकप्रकाशकरो भवजलधिनावो

मूलप्रकृतिस्वभावस्सुखतरो

रविसहस्रसन्निभदेहो

कविजननुत मूषिकवाहो

अवनतदेवतासमूहो

अविनाशिकैवल्यगेहो श्री

✠ ✠ ✠ ✠ ✠

## 2 bālasubrahmaṇyam

# गुरुगुह ध्यानकीर्तनम्

# बालसुब्रह्मण्यम्

रागं: सुरटि ताळं: आदि

पल्लवि

बालसुब्रह्मण्यं भजेऽहं भक्तकल्पभूरुहं श्री

अनुपल्लवि

नीलकण्ठहृदानन्दकरं नित्यशुद्धबुद्धमुक्ताम्बरम्

चरणम्

वेलायुधधरं सुन्दरं वेदान्तार्थबोधचतुरं

फालाक्षगुरुगुहावतारं पराशक्तिसुकुमारं धीरम्

पालितगीर्वाणादिसमूहं पञ्चभूतमयमायामोहं

## 3 kamalāmbike

# कमलाम्बिके

## नवावरणध्यानकीर्तनम्

रागं: तोडि (८) ताळं: रूपकम्

### पल्लवि

कमलाम्बिके आश्रितकल्पलतिके चण्डिके
कमनीयारुणांशुके करविधृतशुके मामव

### अनुपल्लवि

कमलासनादिपूजितकमलपदे बहुवरदे
कमलालयतीर्थवैभवे शिवे करुणार्णवे

### चरणम्

सकललोकनायिके सङ्गीतरसिके

सुकवित्वप्रदायिके सुन्दरि गतमायिके

विकळेबरमुक्तिदाननिपुणे अघहरणे

वियदादिभूतकिरणे विनोदचरणे अरुणे

सकळे गुरुगुहकरणे सदाशिवान्तःकरणे
अकचटतपादिवर्णे अखण्डैकरसपूर्णे

✠ ✠ ✠ ✠ ✠

# १. कमलाम्बा संरक्षतु माम्

## प्रथमावरणकीर्तनम्

रागं: आनन्दभैरवि (२०)  ताळं: तिश्र त्रिपुट

पल्लवि

कमलाम्बा संरक्षतु मां हृत्कमलानगरनिवासिनी अम्ब

अनुपल्लवि

सुमनसाराधिताब्जमुखी सुन्दरमनःप्रियकरसखी
कमलजानन्दबोधसुखी कान्तातारपञ्जरशुकी

चरणम्

त्रिपुरादिचक्रेश्वरी अणिमादिसिद्धीश्वरी

नित्यकामेश्वरी क्षितिपुरत्रैलोक्यमोहनचक्रवर्तिनी

प्रकटयोगिनी सुररिपुमहिषासुरादिमर्दिनी

निगमपुराणादिसंवेदिनी

त्रिपुरेशी गुरुगुहजननी त्रिपुरभञ्जनरञ्जनी
मधुरिपुसहोदरी तलोदरी त्रिपुरसुन्दरी महेश्वरी

✠ ✠ ✠ ✠ ✠

## 5 kamalāmbāṃ bhaja re

# २. कमलाम्बां भज रे

## द्वितीयावरणकीर्तनम्

रागं: कल्याणि (६५) ताळं: आदि

पल्लवि

कमलाम्बां भजरे रे मानस कल्पितमायाकार्यं त्यज रे

अनुपल्लवि

कमलावाणीसेवितपार्श्वां कम्बुजयग्रीवां नतदेवां
कमलापुरसदनां मृदुगदनां कमनीयरदनां कमलवदनाम्

चरणम्

सर्वाशापरिपूरकचक्रस्वामिनीं परमशिवकामिनीं

दूर्वासार्चितगुप्तयोगिनीं दुःखध्वंसिनीं हंसिनीम्

निर्वाणनिजसुखप्रदायिनीं नित्यकल्याणीं कात्यायनीं

शर्वाणीं मधुपविजयवेणीं सद्गुरुगुहजननीं निरञ्जनीम्

गर्वितभण्डासुरभञ्जनीं कामाकर्षिण्यादिरञ्जनीं

निर्विशेषचैतन्यरूपिणीं उर्वीतत्वादिस्वरूपिणीम्

✠ ✠ ✠ ✠ ✠

## 6 śrīkamalāmbikayā

# ३. श्रीकमलाम्बिकया

## तृतीयावरणकीर्तनम्

रागं: शङ्कराभरणम् (२९)  ताळं: रूपकम्

पल्लवि

श्रीकमलाम्बिकया कटाक्षितोऽहं
सच्चिदानन्दपरिपूर्णब्रह्मास्मि

अनुपल्लवि

पाकशासनादिसकलदेवतासेवितया

पङ्कजासनादिपञ्चकृत्यकृत्भावितया

शोकहरचतुरपदया मूकमुख्यवाक्प्रदया
कोकनदविजयपदया गुरुगुहतत्रैपदया

चरणम्

अनङ्गकुसुमाद्यष्टशक्त्याकारया
अरुणवर्णसंक्षोभणचक्राकारया
अनन्तकोट्यण्डनायकशङ्करनायिकया
अष्टवर्गात्मकगुप्ततरया वरया
अनङ्गाद्युपासितया अष्टदळाब्जस्थितया
धनुर्बाणधरकरया दयासुधासागरया

✠ ✠ ✠ ✠ ✠

## 7 kamalāmbikāyai

# ४. कमलाम्बिकायै

## चतुर्थावरणकीर्तनम्

रागं: काम्भोजि (२८)  ताळं: अट

पल्लवि

कमलाम्बिकायै कनकांशुकायै
कर्पूरवीटिकायै नमस्ते नमस्ते

अनुपल्लवि

कमलाकान्तानुजायै कामेश्वर्यै अजायै

हिमगिरितनुजायै ह्रींकरपूज्यायै

कमलानगरविहारिण्यै खलसमूहसंहारिण्यै
कमनीयरत्नहारिण्यै कलिकल्मषपरिहारिण्यै

चरणम्

सकलसौभाग्यदायकाम्भोजचरणायै

संक्षोभिण्यादिशक्तियुतचतुर्थावरणायै

प्रकटचतुर्दशभुवनभरणायै

प्रबलगुरुगुहसंप्रदायान्तःकरणायै

अकळङ्करूपवर्णायै अपर्णायै सुपर्णायै

सुकरधृतचापबाणायै शोभनकरमनुकोणायै

सकुङ्कुमादिलेपनायै चराचरादिकल्पनायै
चिकुरविजितनीलघनायै चिदानन्दपूर्णघनायै

✠ ✠ ✠ ✠ ✠

# ५. श्रीकमलाम्बिकायाः परम्

## पञ्चमावरणकीर्तनम्

रागं: भैरवि (२०) ताळं: झंप

### पल्लवि

श्री कमलाम्बायाः परं नहि रे रे चित्त
क्षित्यादिशिवान्ततत्वस्वरूपिण्याः

### अनुपल्लवि

श्रीकण्ठविष्णुविरिञ्चादिजनयित्र्याः

शिवात्मकविश्वकर्त्र्याः कारयित्र्याः

श्रीकरबहिर्दशारचक्रस्थित्याः
सेवितभैरवीभार्गवीभारत्याः

### चरणम्

नादमयसूक्ष्मरूपसर्वसिद्धिप्रदादि दशशक्त्याराधितमूर्तेः

श्रोत्रादि दशकरणात्मककुळकौळिकादि

बहुविधोपासितकीर्तेः

अभेदनित्यशुद्धबुद्धमुक्त-

सच्चिदानन्दमयपरमाद्वैतस्फूर्तेः

आदिमध्यान्तरहिताप्रमेय गुरुगुहमोदित-

सर्वार्थसाधकस्फूर्तेः

मूलादिनवाधारव्यावृत्तदशध्वनिभेदज्ञ

योगिबृन्दसंरक्षण्याः अनादिमायाविद्या-
कार्यकारणविनोदकरणपटुतरकटाक्षवीक्षण्याः

✠ ✠ ✠ ✠ ✠

## 9 kamalāmbikāyāstava

# ६. कमलाम्बिकायाः तव

## षष्ठ्यावरणकीर्तनम्

रागं: पुन्नागवराळि (८)  ताळं: रूपकम्

पल्लवि

कमलाम्बिकायास्तव भक्तोऽहं
शङ्कर्याः श्रीकर्याः सङ्गीतरसिकायाः श्री

अनुपल्लवि

सुमशरेक्षुकोदण्डपाशाङ्कुशपाण्याः
अतिमधुरतरवाण्याः शर्वाण्याः कल्याण्याः
रमणीयपुन्नागवराळिविजितवेण्याः श्री

चरणम्

दशकलात्मकवह्निस्वरूपप्रकाशान्तर्दशार-

सर्वरक्षाकरचक्रेश्वर्याः त्रिदशादिनुत-

कचवर्गद्वयमयसर्वज्ञादिदशशक्तिसमेत-

मालिनीचक्रेश्वर्याः त्रिदशविंशद्वर्ण-

गर्भिणीकुण्डलिन्याः दशमुद्रासमाराधितकौळिन्याः

दशरथादिनुतगुरुगुहजनकशिवबोधिन्याः
दशकरणवृत्तिमरीचिनिगर्भयोगिन्याः श्री

✠ ✠ ✠ ✠ ✠

## 10 śrīkamalāmbikāyām

# ७. श्रीकमलाम्बिकायाम्

## सप्तमावरणकीर्तनम्

रागं: सहाना (२२) तालं: त्रिपुट

पल्लवि

श्री कमलाम्बिकायां भक्तिं करोमि
श्रितकल्पवाटिकायां चण्डिकायां जगदम्बिकायाम्

अनुपल्लवि

राकाचन्द्रवदनायां राजीवनयनायां

पाकारिनुतचरणायां आकाशादिकिरणायाम्

ह्रींकारविपिनहरिण्यां ह्रींकारसुशरीरिण्यां
ह्रींकारतरुमञ्जर्यां ह्रींकारेश्वर्यां गौर्याम्

चरणम्

शरीरत्रयविलक्षणसुखतरस्वात्मानुभोगिन्यां

विरिञ्चिहरीशानहरिहयवेदितरहस्ययोगिन्याम्

परादि वाग्देवतारूपवशिन्यादि विभागिन्यां

चरात्मकसर्वरोगहरनिरामयराजयोगिन्याम्

करधृतवीणावादिन्यां कमलानगरविनोदिन्यां
सुरनरमुनिजनमोदिन्यां गुरुगुहवरप्रसादिन्याम्

✠ ✠ ✠ ✠ ✠

## 11 śrīkamalāmbike avāva

# ८. श्रीकमलाम्बिके अवाव

## अष्टमावरणकीर्तनम्

रागं: घण्टा (२०)    ताळं: आदि

पल्लवि

श्रीकमलाम्बिकेऽवाव शिवे करधृतशुकशारिके

अनुपल्लवि

लोकपालिनि कपालिनि शूलिनि लोकजननि

भगमालिनि सकृदालोकय मां सर्वसिद्धि-
प्रदायिके त्रिपुराम्बिके बालाम्बिके

चरणम्

सन्तप्तहेमसन्निभदेहे सदाऽखण्डैकरसप्रवाहे

सन्तापहरत्रिकोणगेहे सकामेश्वरिशक्तिसमूहे

सन्ततं मुक्तिघण्टामणिघोषायमानकवाटद्वारे

अनन्तगुरुगुहविदिते कराङ्गुलिनखोदय-

विष्णुदशावतारे अन्तःकरणेक्षुकार्मुक-

शब्दादि पञ्चतन्मात्रविशिखाऽत्यन्तरागपाश-

द्वेषाङ्कुशधरकरेऽतिरहस्ययोगिनीपरे

✠ ✠ ✠ ✠ ✠

## 12 śrīkamalāmbā jayati

# ९. श्रीकमलाम्बा जयति

## नवमावरणकीर्तनम्

रागं: आहिरि (२०)    ताळं: रूपकम्

पल्लवि

श्री कमलाम्बा जयति अम्बा श्री कमलाम्बा जयति

जगदाम्बा श्री कमलाम्बा जयति

शृङ्गाररसकदम्बा मदम्बा श्री कमलाम्बा जयति

चिद्बिम्बप्रतिबिम्बेन्दुबिम्बा श्री कमलाम्बा जयति

श्रीपुरबिन्दुमध्यस्थचिन्तामणिमन्दिरस्थ-
शिवाकारमञ्चस्थितशिवकामेशाङ्कस्था

अनुपल्लवि

सूकराननाद्यर्चितमहात्रिपुरसुन्दरीं

राजराजेश्वरीं श्रीकरसर्वानन्दमय-
चक्रवासिनीं सुवासिनीं चिन्तयेऽहम्
दिवाकरशीतकिरणपावकादिविकासकरया
भीकरतापत्रयादिभेदनधुरीणतरया
पाकरिपुप्रमुखादिप्रार्थितसुकळेबरया
प्राकट्यपरापरया पालितोदयाकरया

चरणम्

श्रीमात्रे नमस्ते चिन्मात्रे सेवितरमाहरीशविधात्रे
वामादिशक्तिपूजितपरदेवतायाः सकलं जातम्
कामादिद्वादशभिरुपासितकादि-हादि-सादि-
मन्त्र रूपिण्याः प्रेमास्पदशिवगुरुगुहजनन्याम्
प्रीतियुक्तमच्चित्तं विलयतु ब्रह्ममयप्रकाशिनी
नामरूपविमर्शिनी कामकलाप्रदर्शिनी सामरस्य निदर्शिनी

## 13 śrīkamalābike

# श्रीकमलाम्बिके

## मङ्गळ कीर्तनम्

रागं: श्री (२२)  ताळं: खण्ड एकम्

पल्लवि

श्री कमलाम्बिके शिवे पाहिमां ललिते
श्रीपतिविनुते सितासिते शिवसहिते

समष्टिचरणम्

राकाचन्द्रमुखी रक्षितकोलमुखी

रमावाणीसखी राजयोगसुखी

शाकाम्बरि शातोदरि चन्द्रकळाधरि

शङ्करि शङ्करगुरुगुहभक्तवशङ्करि

एकाक्षरि भुवनेश्वरि ईशप्रियकरि

